# कूर्म्मपुराणम्।

कृष्णद्वैपायन-महर्षि-श्रीवेदव्यास-

प्रणीतम्।

पण्डितवरश्रीयुक्तपञ्चाननतर्करत्नेन

सम्पादितम्।

श्रीयुक्तवीरसिंहशास्त्रिणा श्रीयुक्तधीरानन्दकाव्यनिधिना च

परिशोधितम्।

कलिकाताराजधान्याम्

कलुटोलाष्ट्रीटस्थित ३४।१ नं वङ्गवासी-ष्टीम-मेसिन-यन्त्रे

श्रीअरुणोदयरायेण

मुद्रितं प्रकाशितञ्च।

शकाब्दाः १८३२।

# विज्ञप्तिः ।



अष्टादशपुराणेषु पञ्चदशमिदं श्रीकूर्म्मपुराणं कूर्म्मरूपिणो भगवतो मधुसूदनस्य जगदनुजिघृक्षोर्नारदादीन् प्रत्युपदेशः। कौर्म्मं सप्तदशैव लिङ्गादि-ब्रह्मवैवर्त्तायुक्त्या सप्तदशसहस्रश्लोकात्मकत्वमस्य शास्त्रतो जानीमहे ;

इदन्तु पञ्चदशमं पुराणं कौर्म्ममुत्तमम् ।
चतुर्द्धासंस्थितं पुण्यं संहितानां प्रभेदतः ॥
ब्राह्मी भागवती सौरी वैष्णवी च प्रकीर्त्तिताः ।
चतस्रः संहिताः पुण्या धर्म्म-कामार्थ-मोक्षदाः ॥

इत्यतद्ग्रन्थीयपूर्व्वभागप्रथमाध्यायवचनाच्चास्य चतुःसंहितात्मकत्वम् । परं यदिदं प्रविलुप्तबहुग्रन्थेऽस्मिन्नवनतिसागरगर्भे प्रविशति भारते वर्षे साम्प्रतं कूर्म्म-पुराणमिति व्यपदिश्यते तन्न सप्तदशसहस्रश्लोकात्मकं, न वा चतुःसंहिता-संहितमिति सनिर्व्वेदं वदामः। तत् किमिदमिति जिज्ञासमानाः सन्तुष्यमान-वेश्मनो निःसारितं दारुखण्डमिवातिलाभमभिहितासु संहितासु ब्राह्मीं नाम षट्सहस्रश्लोकात्मिकां संहितामिमामवगच्छन्तु कूर्म्मपुराणस्य । तथाच—

इयन्तु संहिता ब्राह्मी चतुर्व्वेदैस्तु सम्मिता ।
भवन्ति षट् सहस्राणि श्लोकानामत्र संख्यया ॥

इत्येतद्ग्रन्थीयपूर्व्वभागप्रथमाध्यायवचनं,

ब्राह्मी पौराणिकी चेयं संहिता पापनाशिनी ।

इत्यपरिभागीयशेषाध्यायवचनञ्चात्र प्रमाणत्वेन जागर्त्ति। यद्यपि मुद्रित-मेकममुद्रितानि च त्रीणि पुस्तकान्यालोच्य ये सुसङ्गतत्वेन बुध्यमानास्तेऽन्त-र्मूलमितरे च सङ्गताः कृच्छ्रसङ्गतयो वा तावदधोनिवेशिताः पाठाः। तदेवं बहुयत्नतः सम्पादितमिदं कौर्म्मं पण्डितवराभ्यां श्रीवीरसिंहशास्त्रि-श्रीधीरानन्दकाव्यनिधिभ्यां संशोधितं सतां प्रीतये भूयादित्यसकृदाशास्महे ।

सम्पादक-
श्रीपञ्चाननतर्करत्नस्य ।
भट्टपल्लीवासिनः ।

# कूर्म्मपुराण-सूचीपत्रम्।

## पूर्व्वभागस्य।

## उपरिभागस्य।





कूर्म्मपुराण-सूचीपत्रं-समाप्तम्।

# कूर्म्मपुराणम्।

## पूर्व्वभागः।

### प्रथमोऽध्यायः।

ओं नमो भगवते वासुदेवाय।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्॥

नमस्कृत्याप्रमेयाय विष्णवे कूर्म्मरूपिणे।
पुराणं सम्प्रवक्ष्यामि यदुक्तं विश्वयोनिना॥ १
सत्रान्ते सूतमनघं नैमिषेया महर्षयः।
पुराणसंहितां पुण्यां पप्रच्छू रोमहर्षणम्॥ २
त्वया सूत महाबुद्धे भगवान् ब्रह्मवित्तमः।
इतिहासपुराणार्थं व्यासः सम्यगुपासितः॥ ३
तस्य ते सर्व्वरोमाणि वचसा हृषितानि यत्।
द्वैपायनस्य तु भवांस्ततो वै रोमहर्षणः॥ ४
भवन्तमेव भगवान् व्याजहार स्वयं प्रभुः।
मुनीनां संहितां वक्तुं व्यासः पौराणिकीं पुरा॥ ५
त्वं हि स्वायम्भुवे यज्ञे सुत्याहे वितते सति।
सम्भूतः संहितां वक्तुं स्वांशेन पुरुषोत्तमः॥ ६
तस्माद्भवन्तं पृच्छामः पुराणं कौर्म्ममुत्तमम्।
वक्तुमर्हसि चास्माकं पुराणार्थविशारद॥ ७
मुनीनां वचनं श्रुत्वा सूतः पौराणिकोत्तमः।
प्रणम्य मनसा प्राह गुरुं सत्यवतीसुतम्॥ ८

रोमहर्षण उवाच।

नमस्कृत्य जगद्योनिं कूर्म्मरूपधरं हरिम्।
वक्ष्ये पौराणिकीं दिव्यां कथां पापप्रणाशिनीम्॥ ९
यां श्रुत्वा पापकर्म्मापि गच्छेत परमां गतिम्।
न नास्तिके कथां पुण्यामिमां ब्रूयात् कदाचन॥ १०
श्रद्दधानाय शान्ताय धार्म्मिकाय द्विजातये।
इमां कथामनुब्रूयात् साक्षान्नारायणेरिताम्॥ ११
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम्॥ १२
ब्राह्मं पुराणं प्रथमं पाद्मं वैष्णवमेव च।
शैवं भागवतञ्चैव भविष्यं नारदीयकम्॥ १३
मार्कण्डेयमथाग्नेयं ब्रह्मवैवर्त्तमेव च।
लैङ्गं तथा च वाराहं स्कान्दं वामनमेव च॥ १४
कौर्म्मं मात्स्यं गारुडञ्च वायवीयमनुत्तमम्।
अष्टादशं समुद्दिष्टं ब्रह्माण्डमिति संज्ञितम्॥ १५
अन्यान्युपपुराणानि मुनिभिः कथितानि तु।
अष्टादश पुराणानि श्रुत्वा संक्षेपतो द्विजाः॥ १६
आद्यं सनत्कुमारोक्तं नारसिंहमतः परम्।
तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम्॥ १७
चतुर्थं शिवधर्म्माख्यं साक्षान्नन्दीशभाषितम्।

दुर्व्वाससोक्तमाश्चर्य्यं नारदीयमतः परम् ॥ १८
कापिलं वामनञ्चैव तथैवोशनसेरितम्।
ब्रह्माण्डं वारुणञ्चैव कालिकाह्वयमेव च ॥ १९
माहेश्वरं तथा शाम्बं सौरं सर्व्वार्थसञ्चयम्।
पराशरोक्तं मारीचं तथैव भार्गवाह्वयम् ॥ २०
इदन्तु पञ्चदशमं पुराणं कौर्म्ममुत्तमम्।
चतुर्द्धा संस्थितं पुण्यं संहितानां प्रभेदतः ॥ २१
ब्राह्मी भागवती सौरी वैष्णवी च प्रकीर्त्तिताः।
चतस्रः संहिताः पुण्या धर्म्म-कामार्थ-मोक्षदाः ॥ २२
इयन्तु संहिता ब्राह्मी चतुर्व्वेदैस्तु सम्मिता।
भवन्ति षट् सहस्राणि श्लोकानामत्र संख्यया ॥ २३
यत्र धर्म्मार्थकामानां मोक्षस्य च मुनीश्वराः।
माहात्म्यमखिलं ब्रह्म ज्ञायते परमेश्वरः ॥ २४
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं पुण्या दिव्या प्रासङ्गिकी कथा ॥ २५
ब्राह्मणाद्यैरियं धार्य्या धार्म्मिकैर्व्वेदपारगैः।
तामहं वर्णयिष्यामि व्यासेन कथितां पुरा ॥ २६
पुरामृतार्थं दैतेय-दानवैः सह देवताः।
मन्थानं मन्दरं कृत्वा ममन्थुः क्षीरसागरम् ॥ २७
मथ्यमाने तदा तस्मिन् कूर्म्मरूपी जनार्द्दनः।
बभार मन्दरं देवो देवानां हितकाम्यया ॥ २८
देवाश्च तुष्टुवुर्द्देवं नारदाद्या महर्षयः।
कूर्म्मरूपधरं दृष्ट्वा साक्षिणं विष्णुमव्ययम् ॥ २९
तदन्तरेऽभवद्देवी श्रीर्नारायणवल्लभा।
जग्राह भगवान् विष्णुस्तामेव पुरुषोत्तमः ॥ ३०
तेजसा विष्णुमव्यक्तं नारदाद्या महर्षयः।
मोहिताः सह शक्रेण श्रेयोवचनमब्रुवन् ॥ ३१
भगवन् देवदेवेश नारायण जगन्मय।
कैषा देवी विशालाक्षी यथावद्ब्रूहि पृच्छताम् ॥ ३२
श्रुत्वा तेषां तदा वाक्यं विष्णुर्दानवमर्द्दनः।
प्रोवाच देवीं सम्प्रेक्ष्य नारदादीनकल्मषान् ॥ ३३
इयं सा परमा शक्तिर्मन्मयी ब्रह्मरूपिणी।
माया मम प्रियानन्ता ययेदं धार्य्यते जगत् ॥ ३४
अनयैव जगत् सर्व्वं सदेवासुर-मानुषम्।
मोहयामि द्विजश्रेष्ठा ग्रसामि विसृजामि च ॥ ३५
उत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिम्।
विद्यया वीक्ष्य(क)चात्मानं तरन्ति विपुलामिमाम् ३६
मस्यास्त्वंशानधिष्ठाय शक्तिमन्तोऽभवन् सुराः।
ब्रह्मेशानादयः सर्व्वे सर्व्वशक्तिरियं मम ॥ ३७
सैषा सर्व्वजगत्सूतिः प्रकृतिस्त्रिगुणात्मिका।
प्रागेव मत्तः सञ्जाता श्रीः कल्पे पद्मवासिनी ॥ ३८
चतुर्भुजा शङ्ख-चक्र-पद्महस्ता स्रगन्विता।
कोटिसूर्य्यप्रतीकाशा मोहिनी सर्व्वदेहिनाम् ॥ ३९
नालं देवा न पितरो मानवा वासवोऽपि च।
मायामेतां समुत्तर्त्तुं ये चान्ये भुवि देहिनः ॥ ४०
इत्युक्ता वासुदेवेन मुनयो विष्णुमब्रुवन्।
ब्रूहि त्वं पुण्डरीकाक्ष यदि कालत्रयेऽपि च ॥ ४१
अथोवाच हृषीकेशो मुनीन् मुनिगणार्च्चितः।
अस्ति द्विजातिप्रवर इन्द्रद्युम्न इति श्रुतः ॥ ४२
पूर्व्वजन्मनि राजाऽभवद्धृष्यः शङ्करादिभिः।
दृष्ट्वा मां कूर्म्मसंस्थानं श्रुत्वा पौराणिकीं स्वयम् ॥ ४३
संहितां मन्मुखाद्दिव्यां पुरस्कृत्य मुनीश्वरान्।
ब्रह्माणञ्च महादेवं देवांश्चान्यान् स्वशक्तिभिः ॥ ४४
मच्छक्तौ संस्थितान् बुद्ध्वा मामेव शरणं गतः।
सम्भाषितो मया चाथ विप्रयोनिं गमिष्यसि ॥ ४५
इन्द्रद्युम्न इति ख्यातो जातिं स्मरसि पौर्व्विकीम्।
सर्व्वेषामेव भूतानां देवानामप्यगोचरम् ॥ ४६
वक्तव्यं तद्गुह्यतमं दास्ये ज्ञानं तवानघ।
लब्ध्वा तन्मामकं ज्ञानं मामेवान्ते प्रवेक्ष्यसि ॥ ४७
अंशान्तरेण भूम्यां त्वं तत्र तिष्ठ सुनिर्वृतः।
वैवस्वतेऽन्तरेऽतीते कार्य्यार्थं मां प्रवेक्ष्यसि ॥ ४८
मां प्रवेक्ष्यन्(ख)पुरीं गत्वा पालयामास मेदिनीम्।
कालधर्म्मं गतः कालाच्छ्वेतद्वीपे मया सह ॥ ४९
भुक्त्वा तान् वैष्णवान् भोगान् योगिनामप्यगोचरान्।
मदाज्ञया मुनिश्रेष्ठा जज्ञे विप्रकुले पुनः ॥ ५०
ज्ञात्वा मां वासुदेवाख्यं यत्र द्वे निहितेऽक्षरे।
विद्याविद्ये गूढ़रूपं यद्ब्रह्म परमं विदुः ॥ ५१
सोऽर्च्चयामास भूतानामाश्रयं परमेश्वरम्।
व्रतोपवासनियमैर्होमैर्ब्राह्मणतर्पणैः ॥ ५२

---

(क) विद्ययान्वीक्ष्येति क्वचित् पाठः।
(ख) प्रवक्ष्येति पाठान्तरम्।

तज्जापो (क) तन्नमस्कारस्तन्निष्ठस्तत्परायणः।
आराधयन् महादेवं योगिनां हृदि संस्थितम् ॥ ५३
तस्यैवं वर्त्तमानस्य कदाचित् परमा कला।
स्वरूपं दर्शयामास दिव्यं विष्णुसमुद्भवम् ॥ ५४
दृष्ट्वा प्रणम्य शिरसा विष्णोर्भगवतः प्रियाम्।
संस्तूय विविधैः स्तोत्रैः कृताञ्जलिरभाषत ॥ ५५

इन्द्रद्युम्न उवाच।

का त्वं देवि विशालाक्षि विष्णुचिह्नाङ्किते शुभे।
याथातथ्येन वै भावं तवेदानीं ब्रवीहि मे ॥ ५६
तस्य तद्वाक्यमाकर्ण्य सुप्रसन्ना सुमङ्गला।
हसन्ती संस्मरन् विष्णुं प्रियं ब्राह्मणमब्रवीत् ॥ ५७

श्रीरुवाच।

न मां पश्यन्ति मुनयो देवाः शक्रपुरोगमाः।
नारायणात्मिकामेकां मायाहं तन्मयी परा ॥ ५८
न मे नारायणाद्भेदो विद्यते हि विचारतः।
तन्मय्यहं परंब्रह्म स विष्णुः परमेश्वरः ॥ ५९
येऽर्च्चयन्तीह भूतानामाश्रयं पुरुषोत्तमम्।
ज्ञानेन कर्म्मयोगेण न तेषां प्रभवाम्यहम् ॥ ६०
तस्मादनादिनिधनं कर्म्मयोगपरायणः।
ज्ञानेनाराधयानन्तं ततो मोक्षमवाप्स्यसि ॥ ६१
इत्युक्तः स मुनिश्रेष्ठ इन्द्रद्युम्नो महामतिः।
प्रणम्य शिरसा देवीं प्राञ्जलिः पुनरब्रवीत् ॥ ६२
कथं स भगवानीशः शाश्वतो निष्कलोऽच्युतः।
ज्ञातुं हि शक्यते देवि ब्रूहि मे परमेश्वरि ॥ ६३
एवमुक्ताथ विप्रेण देवी कमलवासिनी।
साक्षान्नारायणो ज्ञानं दास्यतीत्याह तं मुनिम् ॥ ६४
उभाभ्यामथ हस्ताभ्यां संस्पृश्य प्रणतं मुनिम्।
स्मृत्वा परात्परं विष्णुं तत्रैवान्तरधीयत ॥ ६५
सोऽपि नारायणं द्रष्टुं परमेण समाधिना।
आराधयद्धृषीकेशं प्रणतार्त्तिप्रभञ्जनम् ॥ ६६
ततो बहुतिथे काले गते नारायणः स्वयम्।
प्रादुरासीन्महायोगी पीतवासा जगन्मयः ॥ ६७
दृष्ट्वा देवं समायान्तं विष्णुमात्मानमव्ययम्।
जानुभ्यामवनीं गत्वा तुष्टाव गरुड़ध्वजम् ॥ ६८

इन्द्रद्युम्न उवाच।

यज्ञेशाच्युत गोविन्द माधवानन्त केशव।
कृष्ण विष्णो हृषीकेश तुभ्यं विश्वात्मने नमः ॥ ६९
नमोऽस्तु ते पुराणाय हरये विश्वमूर्त्तये।
सर्ग-स्थिति-विनाशानां हेतवेऽनन्तशक्तये ॥ ७०
निर्गुणाय नमस्तुभ्यं निष्कलाय नमो नमः।
पुरुषाय नमस्तेऽस्तु विश्वरूपाय ते नमः ॥ ७१
नमस्ते वासुदेवाय विष्णवे विश्वयोनये।
आदिमध्यान्तहीनाय ज्ञानगम्याय ते नमः ॥ ७२
नमस्ते निर्व्विकाराय निष्प्रपञ्चाय ते नमः।
भेदाभेदविहीनाय नमोऽस्त्वानन्दरूपिणे ॥ ७३
नमस्ताराय शान्ताय नमोऽप्रतिहतात्मने।
अनन्तमूर्त्तये तुभ्यममूर्त्ताय नमो नमः ॥ ७४
नमस्ते परमार्थाय मायातीताय ते नमः।
नमस्ते परमेशाय ब्रह्मणे परमात्मने ॥ ७५
नमोऽस्तु ते सुसूक्ष्माय महादेवाय ते नमः।
नमः शिवाय शुद्धाय नमस्ते परमेष्ठिने ॥ ७६
त्वयैतत् सृष्टमखिलं त्वमेव परमा गतिः।
त्वं पिता सर्व्वभूतानां त्वं माता पुरुषोत्तम ॥ ७७
त्वमक्षरं परं धाम चिन्मात्रं व्योम निष्कलम्।
सर्व्वस्याधारमव्यक्तमनन्तं तमसः परम् ॥ ७८
प्रपश्यन्ति परात्मानं ज्ञानदीपेन केवलम्।
प्रपद्ये भवतो रूपं तद्विष्णोः परमं पदम् ॥ ७९
एवं स्तुवन्तं भगवान् भूतात्मा भूतभावनः।
उभाभ्यामथ हस्ताभ्यां पस्पर्श प्रहसन्निव ॥ ८०
स्पृष्टमात्रो भगवता विष्णुना मुनिपुङ्गवः।
यथावत् परमं तत्त्वं ज्ञातवांस्त्वत्प्रसादतः ॥ ८१
ततः प्रहृष्टमनसा प्रणिपत्य जनार्द्दनम्।
प्रोवाचोन्निद्रपद्माक्षं पीतवाससमच्युतम् ॥ ८२
त्वत्प्रसादादसन्दिग्धमुत्पन्नं पुरुषोत्तम।
ज्ञानं ब्रह्मैकविषयं परमानन्दसिद्धिदम् ॥ ८३
नमो भगवते तुभ्यं वासुदेवाय वेधसे।
किं करिष्यामि योगेश तन्मे वद जगन्मय ॥ ८४
श्रुत्वा नारायणो वाक्यमिन्द्रद्युम्नस्य माधवः।
उवाच सस्मितं वाक्यमशेषं जगतो हितम् ॥ ८५

(क) तदाशीरिति वा पाठः।

श्रीभगवानुवाच।

वर्णाश्रमाचारवतां पुंसां देवो महेश्वरः।
ज्ञानेन भक्तियोगेन पूजनीयो न चान्यथा ॥ ८६
विज्ञाय तत् परं तत्त्वं विभूतिं कार्य्यकारणम्।
प्रवृत्तिञ्चापि मे ज्ञात्वा मोक्षार्थीश्वरमर्च्चयेत् ॥ ८७
सर्व्वसङ्गान् परित्यज्य ज्ञात्वा मायामयं जगत्।
अद्वैतं भावयात्मानं द्रक्ष्यसे परमेश्वरम् ॥ ८८
त्रिविधां भावनां ब्रह्मन् प्रोच्यमानां निबोध मे।
एका मद्विषया तत्र द्वितीया व्यक्तसंश्रया।
अन्या च भावना ब्राह्मी विज्ञेया सा गुणातिगा॥८९
आसामन्यतमाञ्चाथ भावनां भावयेद्बुधः।
अशक्तः संश्रयेदाद्यामित्येषा वैदिकी श्रुतिः ॥ ९०
तस्मात् सर्व्वप्रयत्नेन तन्निष्ठस्तत्परायणः।
समाराधय विश्वेशं ततो मोक्षमवाप्स्यसि ॥ ९१

इन्द्रद्युम्न उवाच।

किं तत् परतरं तत्त्वं का विभूतिर्जनार्द्दन।
किं कार्य्यं कारणं कस्त्वं प्रवृत्तिश्चापि का तव ॥ ९२

श्रीभगवानुवाच।

परात्परतरं तत्त्वं परं ब्रह्मैकमव्ययम्।
नित्यानन्दमयं ज्योतिरक्षरं तमसः परम् ॥ ९३
ऐश्वर्य्यं तस्य यन्नित्यं विभूतिरिति गीयते।
कार्य्यं जगदथाव्यक्तं कारणं शुद्धमक्षरम् ॥ ९४
अहं हि सर्व्वभूतानामन्तर्यामीश्वरः परः।
सर्गस्थित्यन्तकर्तृत्वं प्रवृत्तिर्मम गीयते ॥ ९५
एतद्विज्ञाय भावेन यथावदखिलं द्विज।
ततस्त्वं कर्म्मयोगेण शाश्वतं सम्यगर्च्चय ॥ ९६

इन्द्रद्युम्न उवाच।

के ते वर्णाश्रमाचारा यैः समाराध्यते परः।
ज्ञानञ्च कीदृशं दिव्यं भावनात्रयसंस्थितम् ॥ ९७
कथं सृष्टमिदं पूर्व्वं कथं संह्रियते पुनः।
कियत्यः सृष्टयो लोके वंशा मन्वन्तराणि च ॥ ९८
कानि तेषां प्रमाणानि पावनानि व्रतानि च।
तीर्थान्यर्कादिसंस्थानं पृथिव्यायामविस्तरम् ॥ ९९
कति द्वीपाः समुद्राश्च पर्व्वताश्च नदी-नदाः।
ब्रूहि मे पुण्डरीकाक्ष यथावदधुना पुनः ॥ १००

कूर्म्म उवाच।

एवमुक्तोऽथ तेनाहं भक्तानुग्रहकाम्यया।
यथावदखिलं सम्यगवोचं मुनिपुङ्गवाः ॥ १०१
व्याख्यायाशेषमेवेदं यत् पृष्टोऽहं द्विजेन तु।
अनुगृह्य च तं विप्रं तत्रैवान्तर्हितोऽभवम् ॥ १०२
सोऽपि तेन विधानेन मदुक्तेन द्विजोत्तमाः।
आराधयामास परं भावपूतः समाहितः ॥ १०३
त्यक्त्वा पुत्रादिषु स्नेहं निर्द्वन्द्वो निष्परिग्रहः।
संन्यस्य सर्व्वकर्म्माणि परं वैराग्यमाश्रितः ॥ १०४
आत्मन्यात्मानमन्वीक्ष्य स्वात्मन्येवाखिलं जगत्।
सम्प्राप्य भावनामन्त्यां ब्राह्मीमक्षरपूर्व्विकाम् ॥१०५
अवाप परमं योगं येनैकं परिपश्यति।
यं विनिद्रा जितश्वासाः काङ्क्षन्ते मोक्षकाङ्क्षिणः॥१०६
ततः कदाचिद्योगीन्द्रो ब्रह्माणं द्रष्टुमव्ययम्।
जगामादित्यनिर्द्देशान्मानसोत्तरपर्व्वतम् ॥ १०७
आकाशेनैव विप्रेन्द्रो योगैश्वर्य्यप्रभावतः।
विमानं सूर्य्यसङ्काशं प्रादुर्भूतमनुत्तमम् ॥ १०८
अन्वगच्छन् देवगणा गन्धर्व्वाप्सरसां गणाः।
दृष्ट्वान्ये पथि योगीन्द्रं सिद्धा ब्रह्मर्षयो ययुः ॥ १०९
ततः स गत्वा तु गिरिं विवेश सुरवन्दितम्।
स्थानं तद्योगिभिर्जुष्टं यत्रास्ते परमः पुमान् ॥ ११०
सम्प्राप्य परमं स्थानं सूर्य्यायुतसमप्रभम्।
विवेश चान्तर्भवनं देवानाञ्च दुरासदम् ॥ १११
विचिन्तयामास परं शरण्यं सर्व्वदेहिनाम्।
अनादिनिधनञ्चैव देवदेवं पितामहम् ॥ ११२
ततः प्रादुरभूत् तस्मिन् प्रकाशः परमाद्भुतः।
तन्मध्ये पुरुषं पूर्व्वमपश्यत् परमं पदम् ॥ ११३
महान्तं तेजसो राशिमगम्यं ब्रह्मविद्विषाम्।
चतुर्म्मुखमुदाराङ्गमर्च्चिभिरुपशोभितम् ॥ ११४
सोऽपि योगिनमन्वीक्ष्य प्रणमन्तमुपस्थितम्।
प्रत्युद्गम्य स्वयं देवो विश्वात्मा परिषस्वजे ॥ ११५
परिष्वक्तस्य देवेन द्विजेन्द्रस्याथ देहतः।
निर्गत्य महती ज्योत्स्ना विवेशादित्यमण्डलम् ॥११६
ऋग्यजुःसामसंज्ञं तत् पवित्रममलं पदम्।
हिरण्यगर्भो भगवान् यत्रास्ते हव्यकव्यभुक् ॥ ११७
द्वारं तद्योगिनामाद्यं वेदान्तेषु प्रतिष्ठितम्।

ब्रह्मतेजोमयं श्रीमन्निष्ठा चैव मनीषिणाम् ॥ ११८
दृष्टमात्रो भगवता ब्रह्मणार्च्चिर्म्मयो मुनिः ।
अपश्यदैश्वरं तेजः शान्तं सर्व्वत्रगं शिवम् ॥ ११९
स्वात्मानमक्षरं व्योम यत्र विष्णोः परं पदम् ।
आनन्दमचलं ब्रह्मस्थानं तत् पारमेश्वरम् ॥ १२०
सर्व्वभूतात्मभूतस्थः परमैश्वर्य्यमास्थितः ।
प्राप्तवानात्मनो धाम यत्तन्मोक्षाख्यमव्ययम् ॥ १२१
तस्मात् सर्व्वप्रयत्नेन वर्णाश्रमविधौ स्थितः ।
समाश्रित्यान्तिमं भावं मायां लक्ष्मीं तरेद्बुधः ॥ १२२

सूत उवाच ।

व्याहृता हरिणा त्वेवं नारदाद्या महर्षयः ।
शक्रेण सहिताः सर्व्वे पप्रच्छुर्गरुडध्वजम् ॥ १२३

ऋषय ऊचुः ।

देवदेव हृषीकेश नाथ नारायणाव्यय ।
तद्वदाशेषमस्माकं यदुक्तं भवता पुरा ॥ १२४
इन्द्रद्युम्नाय विप्राय ज्ञानं धर्म्मादिगोचरम् ।
शुश्रूषुश्चाप्ययं शक्रः सखा तव जगन्मय ॥ १२५
ततः स भगवान् विष्णुः कूर्म्मरूपी जनार्द्दनः ।
रसातलगतो देवो नारदाद्यैर्महर्षिभिः ॥ १२६
पृष्टः प्रोवाच सकलं पुराणं कौर्म्ममुत्तमम् ।
सन्निधौ देवराजस्य तद्वक्ष्ये भवतामहम् ॥ १२७
धन्यं यशस्यमायुष्यं पुण्यं मोक्षप्रदं नृणाम् ।
पुराणश्रवणं विप्राः पठनञ्च विशेषतः ॥ १२८
श्रुत्वा चाध्यायमेवैकं सर्व्वपापैः प्रमुच्यते ।
उपाख्यानमथैकं वा ब्रह्मलोके महीयते ॥ १२९
इदं पुराणं परमं कौर्म्मं कूर्म्मस्वरूपिणा ।
उक्तं देवाधिदेवेन श्रद्धातव्यं द्विजातिभिः ॥ १३०

इति श्रीकौर्म्मे महापुराणे पूर्व्वभागे इन्द्रद्युम्नमोक्षे प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

कूर्म्म उवाच ।

शृणुध्वमृषयः सर्व्वे यत् पृष्टोऽहं जगद्धितम् ।
वक्ष्यमाणं मया सर्व्वमिन्द्रद्युम्नाय भाषितम् ॥ १
भूतैर्भव्यैर्भवद्भिश्च चरितैरुपबृंहितम् ।
पुराणं पुण्यदं नृणां मोक्षधर्म्मानुकीर्त्तनम् ॥ २
अहं नारायणो देवः पूर्व्वमासं न मे परम् ।
उपास्य विपुलां निद्रां भोगिशय्यां समाश्रितः ।
चिन्तयामि पुनः सृष्टिं निशान्ते प्रतिबुध्य तु ॥ ३
ततो मे सहसोत्पन्नः प्रसादो मुनिपुङ्गवाः ।
चतुर्म्मुखस्ततो जातो ब्रह्मा लोकपितामहः ॥ ४
तदन्तरेऽभवत् क्रोधः कस्माच्चित् कारणात् तदा ।
आत्मनो मुनिशार्दूलास्तत्र देवो महेश्वरः ॥ ५
रुद्रः क्रोधात्मको जज्ञे शूलपाणिस्त्रिलोचनः ।
तेजसा सूर्य्यसङ्काशस्त्रैलोक्यं निर्द्दहन्निव ॥ ६
ततः श्रीरभवद्देवी कमलायतलोचना ।
सुरूपा सौम्यवदना मोहिनी सर्व्वदेहिनाम् ॥ ७
शुचिस्मिता सुप्रसन्ना मङ्गला महिमास्पदा ।
दिव्यकान्तिसमायुक्ता दिव्यमाल्योपशोभिता ॥ ८
नारायणी महामाया मूलप्रकृतिरव्यया ।
स्वधाम्ना पूरयन्तीदं मत्पार्श्वं समुपाविशत् ॥ ९
तां दृष्ट्वा भगवान् ब्रह्मा मामुवाच जगत्पतिम् ।
मोहायाशेषभूतानां नियोजय सुरूपिणीम् ॥ १०
येनेयं विपुला सृष्टिर्वर्द्धते मम माधव ।
तथोक्तोऽहं श्रियं देवीमब्रवं प्रहसन्निव ॥ ११
देवीदमखिलं विश्वं सदेवासुरमानुषम् ।
मोहयित्वा ममादेशात् संसारे विनिपातय ॥ १२
ज्ञानयोगरतान् दान्तान् ब्रह्मिष्ठान् ब्रह्मवादिनः ।
अक्रोधनान् सत्यपरान् दूरतः परिवर्ज्जय ॥ १३
ध्यायिनो निर्म्ममाञ्छान्तान् धार्म्मिकान् वेदपारगान् ।
याजिनस्तापसान् विप्रान् दूरतः परिवर्ज्जय ॥ १४
वेदवेदान्तविज्ञान-सञ्छिन्नाशेषसंशयान् ।
महायज्ञपरान् विप्रान् दूरतः परिवर्ज्जय ॥ १५
ये यजन्ति जपैर्होमैर्देवदेवं महेश्वरम् ।
स्वाध्यायेनेज्यया दूरात् तान् प्रयत्नेन वर्ज्जय ॥ १६
भक्तियोगसमायुक्तानीश्वरार्पितमानसान् ।
प्राणायामादिषु रतान् दूरात् परिहरामलान् ॥ १७
प्रणवासक्तमनसो रुद्रजप्यपरायणान् ।
अथर्व्वशिरसो वेत्तॄन् धर्म्मज्ञान् परिवर्ज्जय ॥ १८
बहुनात्र किमुक्तेन स्वधर्म्मपरिपालकान् ।
ईश्वराराधनरतान् मन्नियोगान्न मोहय ॥ १९

एवं मया महामाया प्रेरिता हरिवल्लभा ।
यथादिशं चकारासौ तस्माल्लक्ष्मीं समर्च्चयेत् ॥ २०
श्रियं ददाति विपुलां पुष्टिं मेधां यशो बलम् ।
अर्च्चिता भगवत्पत्नी तस्माल्लक्ष्मीं समर्च्चयेत् ॥ २१
ततोऽसृजत् स भगवान् ब्रह्मा लोकपितामहः ।
चराचराणि भूतानि यथापूर्व्वं ममाज्ञया ॥ २२
मरीचिभृग्वङ्गिरसं पुलस्त्यं पुलहं क्रतुम् ।
दक्षमत्रिं वशिष्ठञ्च सोऽसृजद्योगविद्यया ॥ २३
नवैते ब्रह्मणः पुत्त्रा ब्राह्मणा ब्राह्मणोत्तमाः ।
ब्रह्मवादिन एवैते मरीच्याद्यास्तु साधकाः ॥ २४
ससर्ज्ज ब्राह्मणान् वक्त्रात् क्षत्त्रियांश्च भुजाद्विभुः ।
वैश्यानूरुद्वयाद्देवः पद्भ्यां शूद्रान् पितामहः ॥ २५
यज्ञनिष्पत्तये ब्रह्मा शूद्रवर्ज्जं ससर्ज्ज ह ।
गुप्तये सर्व्वदेवानां तेभ्यो यज्ञो हि निर्ब्बभौ ॥ २६
ऋचो यजूंषि सामानि तथैवाथर्व्वणानि च ।
ब्रह्मणः सहजं रूपं नित्यैषा शक्तिरव्यया ॥ २७
अनादिनिधना दिव्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी भूता यतः सर्व्वाः प्रवृत्तयः ॥ २८
अतोऽन्यानि हि शास्त्राणि पृथिव्यां यानि कानिचित्
न तेषु रमते धीरः पाषण्डी तेन जायते (क)॥ २९
वेदार्थवित्तमैः कार्य्यं यत् स्मृतं मुनिभिः पुरा ।
स ज्ञेयः परमो धर्म्मो नान्यशास्त्रेषु संस्थितः ॥ ३०
या वेदवाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्व्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हिताः स्मृताः ३१
पूर्व्वकल्पे प्रजा जाताः सर्व्वबाधाविवर्ज्जिताः ।
शुद्धान्तःकरणाः सर्व्वाः स्वधर्म्मपरिपालकाः ॥ ३२
ततः कालवशात् तासां रागद्वेषादिकोऽभवत् ।
अधर्म्मो मुनिशार्दूलाः स्वधर्म्मप्रतिबन्धकः ॥ ३३
ततः सा सहजा सिद्धिस्तासां नातीव जायते ।
रजोमात्रात्मिकास्तासां सिद्धयोऽन्यास्तदाभवन् ॥३४
तासु क्षीणास्वशेषासु कालयोगेन ताः पुनः ।
वार्त्तोपायं पुनश्चक्रुर्हस्तसिद्धिञ्च कर्म्मजाम् ॥ ३५
ततस्तासां विभुर्ब्रह्मा कर्म्माजीवमकल्पयत् ।
स्वायम्भुवो मनुः पूर्व्वं धर्म्मान् प्रोवाच सर्व्वदृक् ॥ ३६
साक्षात् प्रजापतेर्म्मूर्त्तिर्निसृष्टा ब्रह्मणो द्विजाः ।
भृग्वादयस्तद्वदनाच्छ्रुत्वा धर्म्मानथोचिरे ॥ ३७
यजनं याजनं दानं ब्राह्मणस्य प्रतिग्रहः ।
अध्यापनञ्चाध्ययनं षट् कर्म्माणि द्विजोत्तमाः ॥ ३८
दानमध्ययनं यज्ञो धर्म्मः क्षत्त्रिय-वैश्ययोः
दण्डो युद्धं क्षत्त्रियस्य कृषिर्वैश्यस्य शस्यते ॥ ३९
शुश्रूषैव द्विजातीनां शूद्राणां धर्म्मसाधनम् ।
कारुकर्म्म तथाजीवः पाकयज्ञादि धर्म्मतः ॥ ४०
ततः स्थितेषु वर्णेषु स्थापयामास चाश्रमान् ।
गृहस्थञ्च वनस्थञ्च भिक्षुकं ब्रह्मचारिणम् ॥ ४१
अग्नयोऽतिथिशुश्रूषा यज्ञो दानं सुरार्च्चनम् ।
गृहस्थस्य समासेन धर्म्मोऽयं मुनिपुङ्गवाः ॥ ४२
होमो मूल-फलाशित्वं स्वाध्यायस्तप एव च ।
संविभागो यथान्यायं धर्म्मोऽयं वनवासिनाम् ॥ ४३
भक्षाशनञ्च मौनित्वं तपो ध्यानं विशेषतः ।
सम्यग्ज्ञानञ्च वैराग्यं धर्म्मोऽयं भिक्षुके मतः ॥ ४४
भिक्षाचर्य्या च शुश्रूषा गुरोः स्वाध्याय एव च ।
सन्ध्याकर्म्माग्निकार्य्यञ्च धर्म्मोऽयं ब्रह्मचारिणाम्॥४५
ब्रह्मचारि-व[illegible] भिक्षुकाणां द्विजोत्तमाः ।
साधारणं ब्रह्मचर्य्यं प्रोवाच कमलोद्भवः ॥ ४६
ऋतुकालाभिगामित्वं स्वदारेषु न चान्यतः ।
पर्व्ववर्ज्जं गृहस्थस्य ब्रह्मचर्य्यमुदाहृतम् ॥ ४७
आ गर्भधारणादाज्ञा कार्य्या तेनाप्रमादतः ।
अकुर्व्वाणस्तु विप्रेन्द्रा भ्रूणहा तूपजायते ॥ ४८
वेदाभ्यासोऽन्वहं शक्त्या श्राद्धञ्चातिथिपूजनम् ।
गृहस्थस्य परो धर्म्मो देवताभ्यर्च्चनं तथा ॥ ४९
वैवाह्यमग्निमिन्धीत सायं प्रातर्यथाविधि ।
देशान्तरगते वाथ सुतः पत्नृत्विगेव वा ॥ ५०
त्रयाणामाश्रमाणान्तु गृहस्थो योनिरुच्यते ।
अन्ये तमुपजीवन्ति तस्माच्छ्रेयान् गृहाश्रमी ॥ ५१
ऐकाश्रम्यं गृहस्थस्य चतुर्णां श्रुतिदर्शनात् ।
तस्माद्गार्हस्थ्यमेवैकं विज्ञेयं धर्म्मसाधनम् ॥ ५२
परित्यजेदर्थ-कामौ यौ स्यातां धर्म्मवर्ज्जितौ ।
सर्व्वलोकविरुद्धञ्च धर्म्ममप्याचरेन्न तु ॥ ५३
धर्म्मात् सञ्जायते ह्यर्थो धर्म्मात् कामोऽभिजायते ।
धर्म्म एवापवर्गाय तस्माद्धर्म्मं समाश्रयेत् ॥ ५४
धर्म्मश्चार्थश्च कामश्च त्रिवर्गस्त्रिगुणो मतः ।

(क) रमते बुध इति क्वचित् पाठः ।

सत्त्वं रजस्तमश्चेति तस्मादर्म्मं समाश्रयेत्॥ ५५
ऊर्द्धं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः॥ ५६
यस्मिन् धर्म्मसमायुक्तौ ह्यर्थकामौ व्यवस्थितौ।
इह लोके सुखी भूत्वा प्रेत्यानन्त्याय कल्पते॥ ५७
धर्म्मात् सञ्जायते मोक्षो ह्यर्थात् कामोऽभिजायते
एवं साधन-साध्यत्वं चातुर्व्विध्ये प्रदर्शितम्॥ ५८
य एवं वेद धर्म्मार्थ-काम-मोक्षस्य मानवः।
माहात्म्यञ्चानुतिष्ठेत स चानन्त्याय कल्पते॥ ५९
तस्मादर्थञ्च कामञ्च त्यक्त्वा धर्म्मं समाश्रयेत्।
धर्म्मात् सञ्जायते सर्व्वमित्याहुर्ब्रह्मवादिनः॥ ६०
धर्म्मेण धार्य्यते सर्व्वं जगत् स्थावरजङ्गमम्।
अनादिनिधना शक्तिः सैषा ब्राह्मी द्विजोत्तमाः॥६१
कर्म्मणा प्राप्यते धर्म्मो ज्ञानेन च न संशयः।
तस्माज्ज्ञानेन सहितं कर्म्मयोगं समाश्रयेत्॥ ६२
प्रवृत्तञ्च निवृत्तञ्च द्विविधं कर्म्म वैदिकम्।
ज्ञानपूर्व्वं निवृत्तं स्यात् प्रवृत्तं यदतोऽन्यथा॥ ६३
निवृत्तं सेवमानस्तु याति तत् परमं पदम्।
तस्मान्निवृत्तं संसेव्यमन्यथा संसरेत् पुनः॥ ६४
क्षमा दमो दया दानमलोभस्त्याग एव च।
आर्ज्जवञ्चानसूया च तीर्थानुसरणं तथा॥ ६५
सत्यं सन्तोषमास्तिक्यं श्रद्धा चेन्द्रियनिग्रहः।
देवताभ्यर्च्चनं पूजा ब्राह्मणानां विशेषतः॥ ६६
अहिंसा प्रियवादित्वमपैशुन्यमकल्कता।
सामासिकमिमं धर्म्मं चातुर्व्वर्ण्येऽब्रवीन्मनुः॥ ६७
प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम्।
स्थानमैन्द्रं क्षत्त्रियाणां संग्रामेष्वपलायिनाम्॥ ६८
वैश्यानां मारुतं स्थानं स्वधर्म्ममनुवर्त्तताम्।
गान्धर्व्वं शूद्रजातीनां परिचारेण वर्त्तताम्॥ ६९
अष्टाशीतिसहस्राणामृषीणामूर्द्धरेतसाम्।
स्मृतं तेषान्तु यत् स्थानं तदेव गुरुवासिनाम्॥ ७०
सप्तर्षीणान्तु यत् स्थानं स्मृतं तद्वै वनौकसाम्।
प्राजापत्यं गृहस्थानां स्थानमुक्तं स्वयम्भुवा॥ ७१
यतीनां जितचित्तानां न्यासिनामूर्द्धरेतसाम्।
हैरण्यगर्भं तत् स्थानं यस्मान्नावर्त्तते पुनः॥ ७२
योगिनाममृतं स्थानं व्योमाख्यं परमक्षरम्।
आनन्दमैश्वरं धाम सा काष्ठा सा परा गतिः॥ ७३

ऋषय ऊचुः।

भगवन् देवतारिघ्न हिरण्याक्षनिसूदन।
चत्वारो ह्याश्रमाः प्रोक्ता योगिनामेक उच्यते॥७४

कूर्म्म उवाच।

सर्व्वकर्म्माणि सन्न्यस्य समाधिमचलं श्रितः।
य आस्ते निश्चलो योगी स सन्न्यासी च पञ्चमः॥७५
सर्व्वेषामाश्रमाणान्तु द्वैविध्यं श्रुतिदर्शितम्।
ब्रह्मचार्य्युपकुर्व्वाणो नैष्ठिको ब्रह्मतत्परः॥ ७६
योऽधीत्य विधिवद्वेदान् गृहस्थाश्रममाव्रजेत्।
उपकुर्व्वाणको ज्ञेयो नैष्ठिको मरणान्तिकः॥ ७७
उदासीनः साधकश्च गृहस्थो द्विविधो भवेत्।
कुटुम्बभरणायत्तः साधकोऽसौ गृही भवेत्॥ ७८
ऋणानि त्रीण्यपाकृत्य त्यक्त्वा भार्य्याधनादिकम्।
एकाकी यस्तु विचरेदुदासीनः स मौक्षिकः॥ ७९
तपस्तप्यति योऽरण्ये यजेद्देवान् जुहोति च।
स्वाध्याये चैव निरतो वनस्थस्तापसो मतः॥ ८०
तपसा कर्षितोऽत्यर्थं यस्तु ध्यानपरो भवेत्।
सान्न्यासिकः स विज्ञेयो वानप्रस्थाश्रमे स्थितः॥ ८१
योगाभ्यासरतो नित्यमारुरुक्षुर्जितेन्द्रियः।
ज्ञानाय वर्त्तते भिक्षुः प्रोच्यते पारमेष्ठिकः॥ ८२
यस्त्वात्मरतिरेव स्यान्नित्यतृप्तो महामुनिः।
सम्यग्दर्शनसम्पन्नः स योगी भिक्षुरुच्यते॥ ८३
ज्ञानसन्न्यासिनः केचिद्वेदसन्न्यासिनोऽपरे।
कर्म्मसन्न्यासिनः केचित् त्रिविधाः पारमेष्ठिकाः॥८४
योगी च त्रिविधो ज्ञेयो भौतिकः सांख्य एव च।
तृतीयोऽत्याश्रमी प्रोक्तो योगमुत्तममाश्रितः॥ ८५
प्रथमा भावना पूर्व्वे सांख्ये त्वक्षरभावना।
तृतीये चान्तिमा प्रोक्ता भावना पारमेश्वरी॥ ८६
तस्मादेतद्विजानीध्वमाश्रमाणां चतुष्टयम्।
सर्व्वेषु वेदशास्त्रेषु पञ्चमो नोपपद्यते॥ ८७
एवं वर्णाश्रमान् सृष्ट्वा देवदेवो निरञ्जनः।
दक्षादीन् प्राह विश्वात्मा सृजध्वं विविधाः प्रजाः॥८८
ब्रह्मणो वचनात् पुत्त्रा दक्षाद्या मुनिसत्तमाः।
असृजन्त प्रजाः सर्व्वा देवमानुषपूर्व्विकाः॥ ८९
इत्येवं भगवान् ब्रह्मा स्रष्टृत्वे संव्यवस्थितः।

अहं वै पालयामीदं संहरिष्यति शूलभृत् ॥ ९०
तिस्रस्तु मूर्त्तयः प्रोक्ता ब्रह्म-विष्णु शिवात्मिकाः।
रजः-सत्त्व-तमोयोगात् परस्य परमात्मनः ॥ ९१
अन्योन्यमनुरक्तास्ते ह्यन्योन्यमुपजीविनः।
अन्योन्यं प्रणतास्चैव लीलया परमेश्वराः ॥ ९२
ब्राह्मी माहेश्वरी चैव तथैवाक्षरभावना।
तिस्रस्तु भावना रुद्रे वर्त्तन्ते सततं द्विजाः ॥ ९३
प्रवर्त्तते मय्यजस्रमाद्या चाक्षरभावना।
द्वितीया ब्रह्मणः प्रोक्ता देवस्याक्षरभावना ॥ ९४
अहन्त्वेव महादेवो न भिन्नो परमार्थतः।
विभज्य स्वेच्छयात्मानं सोऽन्तर्यामीश्वरः स्थितः॥९५
त्रैलोक्यमखिलं स्रष्टुं सदेवासुरमानुषम्।
पुरुषः परतोऽव्यक्ताद्ब्रह्मत्वं समुपागमत् ॥ ९६
तस्माद्ब्रह्मा महादेवो विष्णुर्विश्वेश्वरः परः।
एकस्यैव स्मृतास्तिस्रो मूर्त्तीः कार्य्यवशात् प्रभोः॥९७
तस्मात् सर्व्वप्रयत्नेन वन्द्याः पूज्याः विशेषतः।
यदीच्छेदचिरात् स्थानं यत्तन्मोक्षाख्यमव्ययम् ॥९८
वर्णाश्रमप्रयुक्तेन धर्म्मेण प्रीतिसंयुतः।
पूजयेद्भावयुक्तेन यावज्जीवं प्रतिज्ञया ॥ ९९
चतुर्णामाश्रमाणान्तु प्रोक्तोऽयं विधिवद्द्विजाः।
आश्रमो वैष्णवो ब्राह्मो हराश्रम इति त्रयः ॥ १००
तल्लिङ्गधारी सततं तद्भक्तजनवत्सलः।
ध्यायेदथार्च्चयेदेतान् ब्रह्मविद्यापरायणः ॥ १०१
सर्व्वेषामेव भक्तानां शम्भोर्लिङ्गमनुत्तमम्।
सितेन भस्मना कार्य्यं ललाटे तु त्रिपुण्ड्रकम् ॥ १०२
यस्तु नारायणं देवं प्रपन्नः परमं पदम्।
धारयेत् सर्व्वदा शूलं ललाटे गन्धवारिभिः ॥ १०३
प्रपन्ना ये जगद्बीजं ब्रह्माणं परमेष्ठिनम्।
तेषां ललाटे तिलकं धारणीयन्तु सर्व्वदा ॥ १०४
योऽसावनादिर्भूतादिः कालात्मासौ धृतो भवेत्।
उपर्य्यधोभावयोगात् त्रिपुण्ड्रस्य तु धारणा ॥१०५
यत्तत् प्रधानं त्रिगुणं ब्रह्म-विष्णु-शिवात्मकम्।
धृतं त्रिशूलधरणाद्भवत्येव न संशयः ॥ १०६
ब्रह्मतेजोमयं शुक्लं यदेतन्मण्डलं रवेः।
भवत्येव धृतं स्थानमैश्वरं तिलके कृते ॥ १०७
तस्मात् कार्य्यं त्रिशूलाङ्कं तथा च तिलकं शुभम्।
आयुष्यञ्चापि भक्तानां त्रयाणां विधिपूर्व्वकम् ॥१०८
यजेत जुहुयादग्नौ जपेद्दद्याज्जितेन्द्रियः।
शान्तो दान्तो जितक्रोधो वर्णाश्रमविधानवित्॥१०९
एवं परिचरेद्देवान् यावज्जीवं समाहितः।
तेषां स्वस्थानमचलं सोऽचिरादधिगच्छति ॥ ११०

इति श्रीकौर्म्मे महापुराणे पूर्व्वभागे वर्णाश्रम-
वर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः।

ऋषय ऊचुः।

वर्णा भगवतोद्दिष्टाश्चत्वारोऽप्याश्रमास्तथा।
इदानीं क्रममस्माकमाश्रमाणां वद प्रभो ॥ १

कूर्म्म उवाच।

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।
क्रमेणैवाश्रमाः प्रोक्ताः कारुण्यादन्यथा नहि(क)॥२
उत्पन्नज्ञानविज्ञानो वैराग्यं परमं गतः।
प्रव्रजेद्ब्रह्मचर्य्या तु यदिच्छेत् परमां गतिम् ॥ ३
दारानाहृत्य विधिवदन्यथा विविधैर्मखैः।
यजेदुत्पादयेत् पुत्रान् विरक्तो यदि सन्न्यसेत् ॥ ४
अनिष्ट्वा विधिवद्यज्ञैरनुत्पाद्य तथात्मजान्।
न गार्हस्थ्यं गृहीत्वा न सन्न्यसेद्बुद्धिमान् द्विजः ॥ ५
अथ वैराग्यवेगेण स्थातुं नोत्सहते गृहे।
तत्रैव सन्न्यसेद्विद्वाननिष्ट्वापि द्विजोत्तमः ॥ ६
तथापि विविधैर्यज्ञैरिष्ट्वा वनमथाश्रयन्।
तपस्तप्त्वा तपोयोगाद्विरक्तः सन्न्यसेद्यदि ॥ ७
वानप्रस्थाश्रमं गत्वा न गृहं प्रविशेत् पुनः।
न सन्न्यासी वनञ्चाथ ब्रह्मचर्य्यञ्च साधकः ॥ ८
प्राजापत्यां निरूप्येष्टिमाग्नेयीमथवा द्विजः।
प्रव्रजेत् तु गृही विद्वान् वनाद्वा श्रुतिचोदनात् ॥ ९
प्रकर्त्तुमसमर्थोऽपि जुहोति-यजतिक्रियाः।
अन्धः पङ्गुर्दरिद्रो वा विरक्तः सन्न्यसेद्द्विजः ॥ १०
सर्व्वेषामेव वैराग्यं सन्न्यासे तु विधीयते।
पतत्येवाविरक्तो यः सन्न्यासं कर्त्तुमिच्छति ॥ ११
एकस्मिन्नथवा सम्यग्वर्त्तेतामरणान्तिकम्।

(क) कारणादन्यथा भवेदिति क्वचित् पाठः।

श्रद्धावानाश्रमे युक्तः सोऽमृतत्वाय कल्पते ॥ १२
न्यायागतधनः शान्तो ब्रह्मविद्यापरायणः।
स्वधर्म्मपालको नित्यं ब्रह्मभूयाय कल्पते ॥ १३
ब्रह्मण्याधाय कर्म्माणि निःसङ्गः कामवर्ज्जितः।
प्रसन्नेनैव मनसा कुर्व्वाणो याति तत् पदम् ॥ १४
ब्रह्मणा दीयते देयं ब्रह्मणे सम्प्रदीयते।
ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम् ॥ १५
नाहं कर्त्ता सर्व्वमेतद्ब्रह्मैव कुरुते तथा।
एतद्ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥ १६
प्रीणातु भगवानीशः कर्म्मणानेन शाश्वतः।
करोति सततं बुद्ध्या ब्रह्मार्पणमिदं परम् ॥ १७
यद्वा फलानां सन्न्यासं प्रकुर्य्यात् परमेश्वरे।
कर्म्मणामेतदप्याहुर्ब्रह्मार्पणमनुत्तमम् ॥ १८
कार्य्यमित्येव यत् कर्म्म नियतं सङ्गवर्ज्जितम्।
क्रियते विदुषा कर्म्म तद्भवेदपि मोक्षदम् ॥ १९
अन्यथा यदि कर्म्माणि कुर्य्यान्नित्यान्यपि द्विजः।
अकृत्वा फलसन्न्यासं बध्यते तत्फलेन तु ॥ २०
तस्मात् सर्व्वप्रयत्नेन त्यक्त्वा कर्म्माश्रितं फलम्।
अविद्वानपि कुर्व्वीत कर्म्माप्नोति चिरात् पदम् ॥ २१
कर्म्मणा क्षीयते पापमैहिकं पौर्व्विकं तथा।
मनःप्रसादमन्वेति ब्रह्मविज्ञायते नरः ॥ २२
कर्म्मणा सहिताज्ज्ञानात् सम्यग्योगोऽभिजायते।
ज्ञानञ्च कर्म्मसहितं जायते दोषवर्ज्जितम् ॥ २३
तस्मात् सर्व्वप्रयत्नेन यत्र तत्राश्रमे रतः।
कर्म्माणीश्वरतुष्ट्यर्थं कुर्य्यान्नैष्कर्म्म्यमाप्नुयात् ॥ २४
सम्प्राप्य परमं ज्ञानं नैष्कर्म्म्यं तत्प्रसादतः।
एकाकी निर्म्ममः शान्तो जीवन्नेव विमुच्यते ॥ २५
वीक्षते परमात्मानं परं ब्रह्म महेश्वरम्।
नित्यानन्दी निराभासस्तस्मिन्नेव लयं व्रजेत् ॥ २६
तस्मात् सेवेत सततं कर्म्मयोगं प्रसन्नधीः।
तृप्तये परमेशस्य तत् पदं याति शाश्वतम् ॥ २७
एतद्वः कथितं सर्व्वं चातुराश्रम्यमुत्तमम्।
न ह्येतत् समतिक्रम्य सिद्धिं विन्दति मानवः ॥ २८

इति श्रीकौर्म्मे महापुराणे पूर्व्वभागे चातुराश्रम्यकथनं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः।

सूत उवाच।

श्रुत्वाश्रमविधिं कृत्स्नमृषयो हृष्टचेतसः।
नमस्कृत्य हृषीकेशं पुनर्वचनमब्रुवन् ॥ १

मुनय ऊचुः।

भाषितं भवता सर्व्वं चातुराश्रम्यमुत्तमम्।
इदानीं श्रोतुमिच्छामो यथा सम्भवते जगत् ॥ २
कुतः सर्व्वमिदं जातं कस्मिंश्च लयमेष्यति।
नियन्ता कश्च सर्व्वेषां वदस्व पुरुषोत्तम ॥ ३
श्रुत्वा नारायणो वाक्यमृषीणां कूर्म्मरूपधृक्।
प्राह गम्भीरया वाचा भूतानां प्रभवाप्ययौ (क)॥ ४

कूर्म्म उवाच।

महेश्वरः परोऽव्यक्तश्चतुर्व्यूहः सनातनः।
अनन्तश्चाप्रमेयश्च नियन्ता सर्व्वतोमुखः ॥ ५
अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम्।
प्रधानं प्रकृतिश्चेति यमाहुस्तत्त्वचिन्तकाः ॥ ६
गन्ध-वर्ण-रसैर्हीनं शब्द-स्पर्शविवर्ज्जितम्।
अजरं ध्रुवमक्षय्यं नित्यं स्वात्मन्यवस्थितम् ॥ ७
जगद्‌योनिर्महाभूतं परब्रह्म सनातनम्।
विग्रहः सर्व्वभूतानामात्मनाधिष्ठितं महत् ॥ ८
अनाद्यन्तमजं सूक्ष्मं त्रिगुणं प्रभवाव्ययम्।
असाम्प्रतमविज्ञेयं ब्रह्माग्रे समवर्त्तत ॥ ९
गुणसाम्ये तदा तस्मिन् पुरुषे चात्मनि स्थिते।
प्राकृतः प्रलयो ज्ञेयो यावद्विश्वसमुद्भवः ॥ १०
ब्राह्मी रात्रिरियं प्रोक्ता ह्यहः सृष्टिरुदाहृता।
अहर्न्न विद्यते तस्य न रात्रिर्ह्युपचारतः ॥ ११
निशान्ते प्रतिबुद्धोऽसौ जगदादिरनादिमान्।
सर्व्वभूतमयोऽव्यक्तो ह्यन्तर्यामीश्वरः परः ॥ १२
प्रकृतिं पुरुषञ्चैव प्रविश्याशु महेश्वरः।
क्षोभयामास योगेन परेण परमेश्वरः ॥ १३
यथा मदो नवस्त्रीणां यथा वा माधवोऽनिलः।
अनुप्रविष्टः क्षोभाय तथासौ योगमूर्त्तिमान् ॥ १४
स एव क्षोभको विप्राः क्षोभ्यश्च परमेश्वरः।
स सङ्कोच-विकाशाभ्यां प्रधानत्वे व्यवस्थितः ॥ १५

(क) प्रभवोऽव्यय इति पाठान्तरम्।

प्रधानात् चोभ्यमाणाच्च तथा पुंसः पुरातनात्।
प्रादुरासीन्महद्वीजं प्रधानपुरुषात्मकम्॥ १६
महानात्मा मतिर्ब्रह्मा प्रबुद्धिः ख्यातिरीश्वरः।
प्रज्ञा धृतिः स्मृतिः संविदेतस्मादिति तत् स्मृतम्॥१७
वैकारिकस्तैजसश्च भूतादिश्चैव तामसः।
त्रिविधोऽयमहङ्कारो महतः सम्बभूव ह॥ १८
अहङ्कारोऽभिमानश्च कर्त्ता मन्ता च स स्मृतः।
आत्मा च मत्परो जीवो यतः सर्व्वाः प्रवृत्तयः॥१९
पञ्च भूतान्यहङ्कारात् तन्मात्राणि च जज्ञिरे।
इन्द्रियाणि तथा देवाः सर्व्वं तस्यात्मजं जगत्॥२०
मनस्त्वव्यक्तजं प्रोक्तं विकारः प्रथमः स्मृतः।
येनासौ जायते कर्त्ता भूतादींश्चानुपश्यति॥ २१
वैकारिकादहङ्कारात् सर्गो वैकारिकोऽभवत्।
तैजसानीन्द्रियाणि स्युर्देवा वैकारिका दश॥ २२
एकादशं मनस्तत्र स्वगुणेनोभयात्मकम्।
भूततन्मात्रसर्गोऽयं भूतादेरभवद्द्विजाः॥ २३
भूतादिस्तु विकुर्व्वाणः शब्दमात्रं ससर्ज्ज ह।
आकाशं शुषिरं तस्मादुत्पन्नं शब्दलक्षणम्॥ २४
आकाशस्तु विकुर्व्वाणः स्पर्शमात्रं ससर्ज्ज ह।
वायुरुत्पद्यते तस्मात् तस्य स्पर्शं गुणं विदुः॥ २५
वायुश्चापि विकुर्व्वाणो रूपमात्रं ससर्ज्ज ह।
ज्योतिरुत्पद्यते वायोस्तद्रूपगुणमुच्यते॥ २६
ज्योतिश्चापि विकुर्व्वाणं रसमात्रं ससर्ज्ज ह।
सम्भवन्ति ततोऽम्भांसि रसाधाराणि तानि च॥ २७
आपश्चापि विकुर्व्वाणा गन्धमात्रं ससर्ज्जिरे।
सङ्घातो जायते तस्मात् तस्य गन्धो गुणो मतः।
जायते पृथिवी तस्मात् सर्व्वाधारा सनातनी॥ २८
आकाशं शब्दमात्रन्तु स्पर्शमात्रं समावृणोत्।
द्विगुणस्तु ततो वायुः शब्दस्पर्शात्मकोऽभवत्॥ २९
रूपं तथैवाविशतः शब्द-स्पर्शौ गुणावुभौ।
त्रिगुणः स्यात् ततो वह्निः स शब्दस्पर्शरूपवान्॥३०
शब्दः स्पर्शश्च रूपञ्च रसमात्रं समाविशत्।
तस्माच्चतुर्गुणा आपो विज्ञेयास्तु रसात्मिकाः॥ ३१
शब्दः स्पर्शश्च रूपञ्च रसो गन्धं समाविशत्।
तस्मात् पञ्चगुणा भूमिः स्थूला भूतेषु शब्दते॥३२
शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः।
परस्परानुप्रवेशाद्धारयन्ति परस्परम्॥ ३३
एते सप्त महात्मानो ह्यन्योन्यस्य समाश्रयात्।
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः॥ ३४
पुरुषाधिष्ठितत्वाच्च अव्यक्तानुग्रहेण च।
महदादयो विशेषान्ता ह्यण्डमुत्पादयन्ति ते॥ ३५
एककालसमुत्पन्नं जलबुद्बुदवच्च तत्।
विशेषेभ्योऽण्डमभवद्बृहत् तदुदकेशयम्॥ ३६
तस्मिन् कार्य्यस्य करणं संसिद्धं परमेष्ठिनः।
प्राकृतेऽण्डे विवृद्धे तु क्षेत्रज्ञो ब्रह्मसंज्ञितः॥ ३७
स वै शरीरी प्रथमः स वै पुरुष उच्यते।
आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत॥ ३८
यमाहुः पुरुषं हंसं प्रधानात् परतः स्थितम्।
हिरण्यगर्भं कपिलं छन्दोमूर्त्तिं सनातनम्॥ ३९
मेरुरुल्वमभूत् तस्य जरायुश्चापि पर्व्वताः।
गर्भोदकं समुद्राश्च तस्यासन् परमात्मनः॥ ४०
तस्मिन्नण्डेऽभवद्विश्वं सदेवासुरमानुषम्।
चन्द्रादित्यौ सनक्षत्रौ सग्रहौ सह वायुना॥ ४१
अद्भिर्दशगुणाभिश्च वाह्यतोऽण्डं समावृतम्।
आपो दशगुणेनैव तेजसा वाह्यतो वृताः॥ ४२
तेजो दशगुणेनैव वाह्यतो वायुना वृतम्।
आकाशेनावृतो वायुः खन्तु भूतादिना वृतम्।
भूतादिर्महता तद्वदव्यक्तेनावृतो महान्॥ ४३
एते लोका महात्मानः सर्व्वे तत्त्वाभिमानिनः।
वसन्ति तत्र पुरुषास्तदात्मानो व्यवस्थिताः॥ ४४
ईश्वरा योगधर्म्माणो ये चान्ये तत्त्वचिन्तकाः।
सर्व्वज्ञाः शान्तरजसो नित्यं मुदितमानसाः॥ ४५
एतैरावरणैरण्डं प्राकृतैः सप्तभिर्वृतम्।
एतावच्छक्यते वक्तुं मायैषा गहना द्विजाः॥ ४६
एतत्प्राधानिकं कार्य्यं यन्मया वीजमीरितम्।
प्रजापतेः परा मूर्त्तिरितीयं वैदिकी श्रुतिः॥ ४७
ब्रह्माण्डमेतत् सकलं सप्तलोकबलान्वितम्।
द्वितीयं तस्य देवस्य शरीरं परमेष्ठिनः॥ ४८
हिरण्यगर्भो भगवान् ब्रह्मा वै कनकाण्डजः।
तृतीयं भगवद्रूपं प्राहुर्वेदार्थवेदिनः॥ ४९
रजोगुणमयञ्चान्यद्रूपं तस्यैव धीमतः।
चतुर्म्मुखः स भगवान् जगत्सृष्टौ प्रवर्त्तते॥ ५०

सृष्टञ्च पाति सकलं विश्वात्मा विश्वतोमुखः।
सत्त्वं गुणमुपाश्रित्य विष्णुर्विश्वेश्वरः स्वयम् ॥ ५१
अन्तकाले स्वयं देवः सर्व्वात्मा परमेश्वरः।
तमोगुणं समाश्रित्य रुद्रः संहरते जगत् ॥ ५२
एकोऽपि सन् महादेवस्त्रिधासौ समवस्थितः।
सर्ग-रक्षा-लयगुणैर्निर्गुणोऽपि निरञ्जनः ॥ ५३
एकधा स द्विधा चैव त्रिधा च बहुधा गुणैः ॥ ५४
योगेश्वरः शरीराणि करोति विकरोति च।
नानाकृति-क्रिया-रूप-नामवन्ति स्वलीलया ॥ ५५
हिताय चैव भक्तानां स एव ग्रसते पुनः।
त्रिधा विभज्य चात्मानं त्रैकाल्ये सम्प्रवर्त्तते।
सृजते ग्रसते चैव रक्षते च विशेषतः ॥ ५६
यस्मात् सृष्ट्वानुगृह्णाति ग्रसते च पुनः प्रजाः।
गुणात्मकत्वात् त्रैकाल्ये तस्मादेकः स उच्यते ॥ ५७
अग्रे हिरण्यगर्भः स प्रादुर्भूतः सनातनः।
आदित्वादादिदेवोऽसावजातत्वादजः स्मृतः ॥ ५८
पाति यस्मात् प्रजाः सर्व्वाः प्रजापतिरिति स्मृतः।
देवेषु च महादेवो महादेव इति स्मृतः ॥ ५९
बृहत्त्वाच्च स्मृतो ब्रह्मा परत्वात् परमेश्वरः।
वशित्वादप्यवश्यत्वादीश्वरः परिभाषितः ॥ ६०
ऋषिः सर्व्वत्रगत्वेन हरिः सर्व्वहरो यतः।
अनुत्पादाच्च पूर्व्वत्वात् स्वयम्भुरिति स स्मृतः ॥ ६१
नराणामयनं यस्मात् तेन नारायणः स्मृतः।
हरः संसारहरणाद्विभुत्वाद्विष्णुरुच्यते ॥ ६२
भगवान् सर्व्वविज्ञानादवनादोमिति स्मृतः।
सर्व्वज्ञः सर्व्वविज्ञानात् सर्व्वः सर्व्वमयो यतः ॥ ६३
शिवः स्यान्निर्म्मलो यस्माद्विभुः सर्व्वगतो यतः।
तारणात् सर्व्वदुःखानां तारकः परिगीयते ॥ ६४
बहुनात्र किमुक्तेन सर्व्वं ब्रह्ममयं जगत्।
अनेकभेदभिन्नस्तु क्रीड़ते परमेश्वरः ॥ ६५
इत्येष प्राकृतः सर्गः संक्षेपात् कथितो मया।
अबुद्धिपूर्व्वकां विप्रा ब्राह्मीं सृष्टिं निबोधत ॥ ६६

इति श्रीकौर्म्मे महापुराणे पूर्व्वभागे प्राकृत-सर्गो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः।

कूर्म्म उवाच।

स्वयम्भुवोऽपि वृत्तस्य कालसंख्या द्विजोत्तमाः।
न शक्यते समाख्यातुं बहुवर्षैरपि स्वयम् ॥ १
कालसंख्या समासेन परार्द्धद्वयकल्पिता।
स एव स्यात् परः कालस्तदन्ते सृज्यते पुनः ॥ २
निजेन तस्य मानेन चायुर्वर्षशतं स्मृतम्।
तत्परार्द्धं तदर्द्धं वा परार्द्धमभिधीयते ॥ ३
काष्ठा पञ्चदश ख्याता निमेषा द्विजसत्तमाः।
काष्ठात्रिंशत् कला त्रिंशत्कला मौहूर्त्तिकी गतिः ॥४
तावत्संख्यैरहोरात्रं मुहूर्त्तैर्मानुषं स्मृतम्।
अहोरात्राणि तावन्ति मासः पक्षद्वयात्मकः ॥ ५
तैः षड्भिरयनं वर्षं द्वेऽयने दक्षिणोत्तरे।
अयनं दक्षिणं रात्रिर्देवानामुत्तरं दिनम् ॥ ६
दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम्।
चतुर्युगं द्वादशभिस्तद्विभागं निबोधत ॥ ७
चत्वार्य्याहुः सहस्राणि वर्षाणां तत् कृतं युगम्।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च कृतस्य तु ॥ ८
त्रिशती द्विशती सन्ध्या तथा चैकशती क्रमात्।
अंशकं षट्शतं तस्मात् कृतसन्ध्यांशकैर्विना ॥ ९
त्रिद्व्येकधा च साहस्रं विना सन्ध्यांशकेन तु।
त्रेता-द्वापर-तिष्याणां कालज्ञाने प्रकीर्त्तितम् ॥ १०
एतद्द्वादशसाहस्रं साधिकं परिकल्पितम्।
तदेकसप्ततिगुणं मनोरन्तरमुच्यते ॥ ११
ब्रह्मणो दिवसे विप्रा मनवश्च चतुर्द्दश।
स्वायम्भुवादयः सर्व्वे ततः सावर्णिकादयः ॥ १२
तैरियं पृथिवी सर्व्वा सप्तद्वीपा सपर्व्वता।
पूर्णं युगसहस्रं वै परिपाल्या नरेश्वरैः ॥ १३
मन्वन्तरेण चैकेन सर्व्वाण्येवान्तराणि वै।
व्याख्यातानि न सन्देहः कल्पे कल्पे न चैव हि ॥१४
ब्राह्ममेकमहः कल्पस्तावती रात्रिरिष्यते।
चतुर्युगसहस्रन्तु कल्पमाहुर्मनीषिणः ॥ १५
त्रीणि कल्पशतानि स्युस्तथा षष्टिर्द्विजोत्तमाः।
ब्रह्मणो वत्सरस्तज्ज्ञैः कथितो वै द्विजोत्तमाः।
स च कालः शतगुणः परार्द्धश्चैव तद्विदुः ॥ १६

नात् चोभ्यमाणाच्च तथा पुंसः पुरातनात्।
दुरासीन्महद्बीजं प्रधानपुरुषात्मकम् ॥ १६
हानात्मा मतिर्ब्रह्मा प्रबुद्धिः ख्यातिरीश्वरः।
ज्ञा धृतिः स्मृतिः संविदेतस्मादिति तत् स्मृतम् ॥१७
कारिकस्तैजसश्च भूतादिश्चैव तामसः।
विधोऽयमहङ्कारो महतः सम्बभूव ह ॥ १८
हङ्कारोऽभिमानश्च कर्त्ता मन्ता च स स्मृतः।
ात्मा च मत्परो जीवो यतः सर्व्वाः प्रवृत्तयः ॥१९
ञ्च भूतान्यहङ्कारात् तन्मात्राणि च जज्ञिरे।
इन्द्रियाणि तथा देवाः सर्व्वं तस्यात्मजं जगत् ॥२०
मनस्त्वव्यक्तजं प्रोक्तं विकारः प्रथमः स्मृतः।
येनासौ जायते कर्त्ता भूतादींश्चानुपश्यति ॥ २१
वैकारिकादहङ्कारात् सर्गो वैकारिकोऽभवत्।
तैजसानीन्द्रियाणि स्युर्देवा वैकारिका दश ॥ २२
एकादशं मनस्तत्र स्वगुणेनोभयात्मकम्।
भूततन्मात्रसर्गोऽयं भूतादेरभवद्द्विजाः ॥ २३
भूतादिस्तु विकुर्व्वाणः शब्दमात्रं ससर्ज्ज ह।
आकाशं शुषिरं तस्मादुत्पन्नं शब्दलक्षणम् ॥ २४
आकाशस्तु विकुर्व्वाणः स्पर्शमात्रं ससर्ज्ज ह।
वायुरुत्पद्यते तस्मात् तस्य स्पर्शं गुणं विदुः ॥ २५
वायुश्चापि विकुर्व्वाणो रूपमात्रं ससर्ज्ज ह।
ज्योतिरुत्पद्यते वायोस्तद्रूपगुणमुच्यते ॥ २६
ज्योतिश्चापि विकुर्व्वाणं रसमात्रं ससर्ज्ज ह।
सम्भवन्ति ततोऽम्भांसि रसाधाराणि तानि च ॥ २७
आपश्चापि विकुर्व्वाणा गन्धमात्रं ससर्ज्जिरे।
सङ्घातो जायते तस्मात् तस्य गन्धो गुणो मतः।
जायते पृथिवी तस्मात् सर्व्वाधारा सनातनी ॥ २८
आकाशं शब्दमात्रन्तु स्पर्शमात्रं समावृणोत्।
द्विगुणस्तु ततो वायुः शब्दस्पर्शात्मकोऽभवत् ॥ २९
रूपं तथैवाविशतः शब्द-स्पर्शौ गुणावुभौ।
त्रिगुणः स्यात् ततो वह्निः स शब्दस्पर्शरूपवान् ॥३०
शब्दः स्पर्शश्च रूपञ्च रसमात्रं समाविशत्।
तस्माच्चतुर्गुणा ह्यापो विज्ञेयास्तु रसात्मिकाः ॥ ३१
शब्दः स्पर्शश्च रूपञ्च रसो गन्धं समाविशत्।
तस्मात् पञ्चगुणा भूमिः स्थूला भूतेषु शब्द्यते ॥३२
शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः।
परस्परानुप्रवेशाद्धारयन्ति परस्परम् ॥ ३३
एते सप्त महात्मानो ह्यन्योन्यस्य समाश्रयात्।
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥ ३४
पुरुषाधिष्ठितत्वाच्च अव्यक्तानुग्रहेण च।
महदादयो विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥ ३५
एककालसमुत्पन्नं जलबुद्बुदवच्च तत्।
विशेषेभ्योऽण्डमभवद्बृहत् तदुदकेशयम् ॥ ३६
तस्मिन् कार्य्यस्य करणं संसिद्धं परमेष्ठिनः।
प्राकृतेऽण्डे विवृद्धे तु क्षेत्रज्ञो ब्रह्मसंज्ञितः ॥ ३७
स वै शरीरी प्रथमः स वै पुरुष उच्यते।
आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत ॥ ३८
यमाहुः पुरुषं हंसं प्रधानात् परतः स्थितम्।
हिरण्यगर्भं कपिलं छन्दोमूर्त्तिं सनातनम् ॥ ३९
मेरुरुल्बमभूत् तस्य जरायुश्चापि पर्व्वताः।
गर्भोदकं समुद्राश्च तस्यासन् परमात्मनः ॥ ४०
तस्मिन्नण्डेऽभवद्विश्वं सदेवासुरमानुषम्।
चन्द्रादित्यौ सनक्षत्रौ सग्रहौ सह वायुना ॥ ४१
अद्भिर्दशगुणाभिश्च बाह्यतोऽण्डं समावृतम्।
आपो दशगुणेनैव तेजसा बाह्यतो वृताः ॥ ४२
तेजो दशगुणेनैव बाह्यतो वायुना वृतम्।
आकाशेनावृतो वायुः खन्तु भूतादिना वृतम्।
भूतादिर्महता तद्वदव्यक्तेनावृतो महान् ॥ ४३
एते लोका महात्मानः सर्व्वे तत्त्वाभिमानिनः।
वसन्ति तत्र पुरुषास्तदात्मानो व्यवस्थिताः ॥ ४४
ईश्वरा योगधर्म्माणो ये चान्ये तत्त्वचिन्तकाः।
सर्व्वज्ञाः शान्तरजसो नित्यं मुदितमानसाः ॥ ४५
एतैरावरणैरण्डं प्राकृतैः सप्तभिर्वृतम्।
एतावच्छक्यते वक्तुं मायैषा गहना द्विजाः ॥ ४६
एतत्प्राधानिकं कार्य्यं यन्मया बीजमीरितम्।
प्रजापतेः परा मूर्त्तिरितीयं वैदिकी श्रुतिः ॥ ४७
ब्रह्माण्डमेतत् सकलं सप्तलोकबलान्वितम्।
द्वितीयं तस्य देवस्य शरीरं परमेष्ठिनः ॥ ४८
हिरण्यगर्भो भगवान् ब्रह्मा वै कनकाण्डजः।
तृतीयं भगवद्रूपं प्राहुर्वेदार्थवेदिनः ॥ ४९
रजोगुणमयञ्चान्यद्रूपं तस्यैव धीमतः।
चतुर्म्मुखः स भगवान् जगत्सृष्टौ प्रवर्त्तते ॥ ५०

सृष्टञ्च पाति सकलं विश्वात्मा विश्वतोमुखः ।
सत्त्वं गुणमुपाश्रित्य विष्णुर्विश्वेश्वरः स्वयम् ॥ ५१
अन्तकाले स्वयं देवः सर्व्वात्मा परमेश्वरः ।
तमोगुणं समाश्रित्य रुद्रः संहरते जगत् ॥ ५२
एकोऽपि सन् महादेवस्त्रिधासौ समवस्थितः ।
सर्ग-रक्षा-लयगुणैर्निर्गुणोऽपि निरञ्जनः ॥ ५३
एकधा स द्विधा चैव त्रिधा च बहुधा गुणैः ॥ ५४
योगीश्वरः शरीराणि करोति विकरोति च ।
नानाकृति-क्रिया-रूप-नामवन्ति स्वलीलया ॥ ५५
हिताय चैव भक्तानां स एव ग्रसते पुनः ।
त्रिधा विभज्य चात्मानं त्रैकाल्ये सम्प्रवर्त्तते ।
सृजते ग्रसते चैव रक्षते च विशेषतः ॥ ५६
यस्मात् सृष्ट्वानुगृह्णाति ग्रसते च पुनः प्रजाः ।
गुणात्मकत्वात् त्रैकाल्ये तस्मादेकः स उच्यते ॥ ५७
अग्रे हिरण्यगर्भः स प्रादुर्भूतः सनातनः ।
आदित्वादादिदेवोऽसावजातत्वादजः स्मृतः ॥ ५८
पाति यस्मात् प्रजाः सर्व्वाः प्रजापतिरिति स्मृतः ।
देवेषु च महादेवो महादेव इति स्मृतः ॥ ५९
बृहत्त्वाच्च स्मृतो ब्रह्मा परत्वात् परमेश्वरः ।
वशित्वादप्यवश्यत्वादीश्वरः परिभाषितः ॥ ६०
ऋषिः सर्व्वत्रगत्वेन हरिः सर्व्वहरो यतः ।
अनुत्पादाच्च पूर्व्वत्वात् स्वयम्भुरिति स स्मृतः ॥ ६१
नराणामयनं यस्मात् तेन नारायणः स्मृतः ।
हरः संसारहरणाद्विभुत्वाद्विष्णुरुच्यते ॥ ६२
भगवान् सर्व्वविज्ञानादवनादोमिति स्मृतः ।
सर्व्वज्ञः सर्व्वविज्ञानात् सर्व्वः सर्व्वमयो यतः ॥ ६३
शिवः स्यान्निर्म्मलो यस्माद्विभुः सर्व्वगतो यतः ।
तारणात् सर्व्वदुःखानां तारकः परिगीयते ॥ ६४
बहुनात्र किमुक्तेन सर्व्वं ब्रह्ममयं जगत् ।
अनेकभेदभिन्नस्तु क्रीड़ते परमेश्वरः ॥ ६५
इत्येष प्राकृतः सर्गः संक्षेपात् कथितो मया ।
अबुद्धिपूर्व्वकां विप्रा ब्राह्मीं सृष्टिं निबोधत ॥ ६६

इति श्रीकौर्म्मे महापुराणे पूर्व्वभागे प्राकृत-
सर्गो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

कूर्म्म उवाच ।

स्वयम्भुवोऽपि वृत्तस्य कालसंख्या द्विजोत्तमाः ।
न शक्यते समाख्यातुं बहुवर्षैरपि स्वयम् ॥ १
कालसंख्या समासेन परार्द्धद्वयकल्पिता ।
स एव स्यात् परः कालस्तदन्ते सृज्यते पुनः ॥ २
निजेन तस्य मानेन चायुर्वर्षशतं स्मृतम् ।
तत्परार्द्धं तदर्द्धं वा परार्द्धमभिधीयते ॥ ३
काष्ठा पञ्चदश ख्याता निमेषा द्विजसत्तमाः ।
काष्ठात्रिंशत् कला त्रिंशत्कला मौहूर्त्तिकी गतिः ॥ ४
तावत्संख्यैरहोरात्रं मुहूर्त्तैर्मानुषं स्मृतम् ।
अहोरात्राणि तावन्ति मासः पक्षद्वयात्मकः ॥ ५
तैः षड्भिरयनं वर्षं द्वेऽयने दक्षिणोत्तरे ।
अयनं दक्षिणं रात्रिर्देवानामुत्तरं दिनम् ॥ ६
दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम् ।
चतुर्युगं द्वादशभिस्तद्विभागं निबोधत ॥ ७
चत्वार्य्याहुः सहस्राणि वर्षाणां तत् कृतं युगम् ।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च कृतस्य तु ॥ ८
त्रिशती द्विशती सन्ध्या तथा चैकशती क्रमात् ।
अंशकं षट्शतं तस्मात् कृतसन्ध्यांशकैर्विना ॥ ९
त्रिद्व्येकेषा च साहस्रं विना सन्ध्यांशकेन तु ।
त्रेता-द्वापर-तिष्याणां कालज्ञाने प्रकीर्त्तितम् ॥ १०
एतद्द्वादशसाहस्रं साधिकं परिकल्पितम् ।
तदेकसप्ततिगुणं मनोरन्तरमुच्यते ॥ ११
ब्रह्मणो दिवसे विप्रा मनवश्च चतुर्द्दश ।
स्वायम्भुवादयः सर्व्वे ततः सावर्णिकादयः ॥ १२
तैरियं पृथिवी सर्व्वा सप्तद्वीपा सपर्व्वता ।
पूर्णं युगसहस्रं वै परिपाल्या नरेश्वरैः ॥ १३
मन्वन्तरेण चैकेन सर्व्वाण्येवान्तराणि वै ।
व्याख्यातानि न सन्देहः कल्पे कल्पे न चैव हि ॥१४
ब्राह्ममेकमहः कल्पस्तावती रात्रिरिष्यते ।
चतुर्युगसहस्रन्तु कल्पमाहुर्मनीषिणः ॥ १५
त्रीणि कल्पशतानि स्युस्तथा षष्टिर्द्विजोत्तमाः ।
ब्रह्मणो वत्सरस्तज्ज्ञैः कथितो वै द्विजोत्तमाः ।
स च कालः शतगुणः परार्द्धश्चैव तद्विदुः ॥ १६

तस्यान्ते सर्व्वसत्त्वानां स्वहेतौ प्रकृतौ लयः।
तेनायं प्रोच्यते सद्भिः प्राकृतः प्रतिसञ्चरः॥ १७
ब्रह्मनारायणेशानां त्रयाणां प्रकृतौ लयः।
प्रोच्यते कालयोगेन पुनरेव च सम्भवः॥ १८
एवं ब्रह्मा च भूतानि वासुदेवोऽपि शङ्करः।
कालेनैव तु सृज्यन्ते स एव ग्रसते पुनः॥ १९
अनादिरेष भगवान् कालोऽनन्तोऽजरोऽमरः।
सर्व्वगत्वात् स्वतन्त्रत्वात् सर्व्वात्मत्वान्महेश्वरः॥ २०
ब्रह्माणो बहवो रुद्रा ह्यन्ये नारायणादयः।
एको हि भगवानीशः कालः कविरिति श्रुतिः॥ २१
एकमत्र व्यतीतन्तु परार्द्धं ब्रह्मणो द्विजाः।
साम्प्रतं वर्त्तते त्वर्द्धं तस्य कल्पोऽयमग्रजः॥ २२
योऽतीतः सोऽन्तिमः कल्पः पाद्म इत्युच्यते बुधैः।
वाराहो वर्त्तते कल्पस्तस्य वक्ष्यामि विस्तरम्॥ २३

इति श्रीकौर्म्मे महापुराणे पूर्व्वभागे काल-
संख्याकथनं नाम पञ्चमोऽध्यायः॥ ५॥

---

## षष्ठोऽध्यायः।

### कूर्म्म उवाच।

आसीदेकार्णवं घोरमविभागं तमोमयम्।
शान्तवातादिकं सर्व्वं न प्राज्ञायत किञ्चन॥ १
एकार्णवे तदा तस्मिन् नष्टे स्थावर-जङ्गमे।
तदा समभवद्ब्रह्मा सहस्राक्षः सहस्रपात्॥ २
सहस्रशीर्षा पुरुषो रुक्मवर्णो ह्यतीन्द्रियः।
ब्रह्मा नारायणाख्यस्तु सुष्वाप सलिले तदा॥ ३
इमञ्चोदाहरन्त्यत्र श्लोकं नारायणं प्रति।
ब्रह्मस्वरूपिणं देवं जगतः प्रभवाव्ययम्॥ ४
आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
अयनं तस्य ता यस्मात् तेन नारायणः स्मृतः॥ ५
तुल्यं युगसहस्रस्य नैशं कालमुपास्य सः।
शर्व्वर्य्यन्ते प्रकुरुते ब्रह्मत्वं सर्गकारणात्॥ ६
ततस्तु सलिले तस्मिन् विज्ञायान्तर्गतां महीम्।
अनुमानात् तदुद्धारं कर्त्तुकामः प्रजापतिः॥ ७
जलक्रीड़ासु रुचिरं वाराहं रूपमास्थितः।
अधृष्यं मनसाप्यन्यैर्वाङ्मयं ब्रह्मसंज्ञितम्॥ ८
पृथिव्युद्धरणार्थाय प्रविश्य च रसातलम्।
दंष्ट्रयाभ्युज्जहारैनामात्माधारो धराधरः॥ ९
दृष्ट्वा दंष्ट्राग्रविन्यस्तां पृथ्वीं प्रथितपौरुषम्।
अस्तुवन् जनलोकस्थाः सिद्धा ब्रह्मर्षयो हरिम्॥ १०

### ऋषय ऊचुः।

नमस्ते देवदेवाय ब्रह्मणे परमेष्ठिने।
पुरुषाय पुराणाय शाश्वतायाजराय च॥ ११
नमः स्वयम्भुवे तुभ्यं स्रष्ट्रे सर्व्वार्थवेदिने।
नमो हिरण्यगर्भाय वेधसे परमात्मने॥ १२
नमस्ते वासुदेवाय विष्णवे विश्वयोनये।
नारायणाय देवाय देवानां हितकारिणे॥ १३
नमोऽस्तु ते चतुर्व्वक्त्र-शार्ङ्ग-चक्रासिधारिणे।
सर्व्वभूतात्मभूताय कूटस्थाय नमो नमः॥ १४
नमो वेदरहस्याय नमस्ते वेदयोनये।
नमो बुद्धाय शुद्धाय नमस्ते ज्ञानरूपिणे॥ १५
नमोऽस्त्वानन्दरूपाय साक्षिणे जगतां नमः।
अनन्तायाप्रमेयाय कार्य्याय कारणाय च॥ १६
नमस्ते पञ्चभूताय पञ्चभूतात्मने नमः।
नमो मूलप्रकृतये मायारूपाय ते नमः॥ १७
नमोऽस्तु ते वराहाय नमस्ते मत्स्यरूपिणे।
नमो योगाधिगम्याय नमः सङ्कर्षणाय ते॥ १८
नमस्त्रिमूर्त्तये तुभ्यं त्रिधाम्ने दिव्यतेजसे।
नमः सिद्धाय पूज्याय गुणत्रयविभागिने॥ १९
नमोऽस्त्वादित्यरूपाय नमस्ते पद्मयोनये।
नमोऽमूर्त्ताय मूर्त्ताय माधवाय नमो नमः॥ २०
त्वयैव सृष्टमखिलं त्वय्येव सकलं स्थितम् (क)।
पालयैतज्जगत् सर्व्वं त्राता त्वं शरणं गतिः॥ २१
इत्थं स भगवान् विष्णुः सनकाद्यैरभिष्टुतः।
प्रसादमकरोत् तेषां वराहवपुरीश्वरः॥ २२
ततः स्वस्थानमानीय पृथिवीं पृथिवीपतिः।
मुमोच रूपं मनसा धारयित्वा धराधरः॥ २३
तस्योपरि जलौघस्य महती नौरिव स्थिता।
विततत्वाच्च देहस्य न मही याति संप्लवम्॥ २४

(क) लयमेष्यतीति पाठः क्वचित्कः।

पृथिवीं स समीकृत्य पृथिव्यां सोऽचिनोद्गिरीन्।
प्राक्सर्गदग्धानखिलान् ततः सर्गेऽदधन्मनः॥ २५

इति श्रीकौर्म्मे महापुराणे पूर्व्वभागे
पृथिव्युद्धारो नाम षष्ठोऽध्यायः॥६॥

---

## सप्तमोऽध्यायः।

कूर्म्म उवाच।

सृष्टिं चिन्तयतस्तस्य कल्पादिषु यथा पुरा।
अबुद्धिपूर्व्वकः सर्गः प्रादुर्भूतस्तमोमयः॥ १
तमोमोहो महामोहस्तामिस्रश्चान्धसंज्ञितः।
अविद्या पञ्चमी तेषां प्रादुर्भूता महात्मनः॥ २
पञ्चधावस्थितः सर्गो ध्यायतः सोऽभिमानिनः।
संवृतस्तमसा चैव बीजकुम्भवदावृतः॥ ३
बहिरन्तश्चाप्रकाशस्तब्धो निःसङ्ग एव च।
मुख्या नगा इति प्रोक्ता मुख्यसर्गस्तु स स्मृतः॥ ४
तं दृष्ट्वाऽसाधकं सर्गममन्यदपरं प्रभुः।
तस्याभिध्यायतः सर्गं तिर्य्यक्स्रोतोऽभ्यवर्त्तत॥ ५
यस्मात् तिर्य्यक् प्रवृत्तः स तिर्य्यक्स्रोतस्ततः स्मृतः।
पश्वादयस्ते विख्याता उत्पथग्राहिणो द्विजाः॥ ६
तमप्यसाधकं ज्ञात्वा सर्गमन्यं ससर्ज्ज ह।
ऊर्द्ध्वस्रोत इति प्रोक्तो देवसर्गस्तु सात्त्विकः॥ ७
ते सुखप्रीतिबहुला बहिरन्तश्चनावृताः।
प्रकाशा बहिरन्तश्च स्वभावाद्देवसंज्ञिताः॥ ८
ततोऽभिध्यायतस्तस्य सत्याभिध्यायिनस्तदा।
प्रादुरासीत् तदा व्यक्तादर्व्वाक्स्रोतस्तु साधकः॥ ९
तत्र प्रकाशबहुलास्तमोद्रिक्ता रजोऽधिकाः।
दुःखोत्कटाः सत्त्वयुता मनुष्याः परिकीर्त्तिताः॥ १०
तं दृष्ट्वा चापरं सर्गममन्यद्भगवानजः।
तस्याभिध्यायतः सर्गं सर्गो भूतादिकोऽभवत्॥ ११
ते परिग्रहिणः सर्व्वे संविभागरताः पुनः।
खादिनश्चाप्यशीलाश्च भूताद्याः परिकीर्त्तिताः॥ १२
इत्येते पञ्च कथिताः सर्गा वै द्विजपुङ्गवाः।
प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु सः॥ १३
तन्मात्राणां द्वितीयस्तु भूतसर्गो हि संस्मृतः।
वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकः स्मृतः॥ १४
इत्येष प्राकृतः सर्गः सम्भूतो बुद्धिपूर्व्वकः।
मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः॥ १५
तिर्य्यक्स्रोतस्तु यः प्रोक्तस्तिर्य्यग्योन्यः स पञ्चमः।
तथोर्द्ध्वस्रोतसां षष्ठो देवसर्गस्तु स स्मृतः॥ १६
ततोऽर्व्वाक्स्रोतसां सर्गः सप्तमः स तु मानुषः।
अष्टमो भौतिकः सर्गो भूतादीनां प्रकीर्त्तितः॥ १७
नवमश्चैव कौमारः प्राकृता वैकृतास्त्विमे।
प्राकृतास्तु त्रयः पूर्व्वे सर्गास्ते बुद्धिपूर्व्वकाः॥ १८
बुद्धिपूर्व्वं प्रवर्त्तन्ते मुख्याद्या मुनिपुङ्गवाः।
अग्रे ससर्ज्ज वै ब्रह्मा मानसानात्मनः समान्॥ १९
सनकं सनातनञ्चैव तथैव च सनन्दनम्।
क्रतुं सनत्कुमारञ्च पूर्व्वमेव प्रजापतिः॥ २०
पञ्चैते योगिनो विप्राः परं वैराग्यमाश्रिताः।
ईश्वरासक्तमनसो न सृष्टौ दधिरे मतिम्॥ २१
तेष्वेवं निरपेक्षेषु लोकसृष्टौ प्रजापतिः।
मुमोह मायया सद्यो मायिनः परमेष्ठिनः॥ २२
सम्बोधयामास च तं जगन्मायी महामुनिः।
नारायणो महायोगी योगिचित्तानुरञ्जनः॥ २३
बोधितस्तेन विश्वात्मा तताप परमं तपः।
स तप्यमानो भगवान् न किञ्चित् प्रत्यपद्यत॥ २४
ततो दीर्घेण कालेन दुःखात् क्रोधोऽभ्यजायत।
क्रोधाविष्टस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः॥ २५
भ्रुकुटीकुटिलात् तस्य ललाटात् परमेष्ठिनः।
समुत्पन्नो महादेवः शरण्यो नीललोहितः॥ २६
स एव भगवानीशस्तेजोराशिः सनातनः।
यं प्रपश्यन्ति विद्वांसः स्वात्मस्थं परमेश्वरम्॥ २७
ओङ्कारं समनुस्मृत्य प्रणम्य च कृताञ्जलिः।
तमाह भगवान् ब्रह्मा सृजेमा विविधाः प्रजाः॥ २८
निशम्य भगवद्वाक्यं शङ्करो धर्म्मवाहनः।
आत्मना सदृशान् रुद्रान् ससर्ज्ज मनसा शिवः।
कपर्द्दिनो निरातङ्कांस्त्रिनेत्रान् नीललोहितान्॥ २९
तं प्राह भगवान् ब्रह्मा जन्ममृत्युयुताः प्रजाः।
सृजेति सोऽब्रवीदीशो नाहं मृत्युजरान्विताः॥ ३०
प्रजाः स्रक्ष्ये जगन्नाथ सृज त्वमशुभाः प्रजाः।
निवार्य्य च तदा रुद्रं ससर्ज्ज कमलोद्भवः।
स्थानाभिमानिनः सर्व्वान् गदतस्तान् निबोधत॥ ३१

